॥ अथ ॥

# आपदुद्धारकबटुक भैरवस्तोत्रम्

## काल भैरवाष्टक, ऋणमोचन मंगल स्तोत्र सहितम्

॥ प्रारभ्यते ॥

अनुवादक—श्री पण्डित रामजी शर्मा

 

श्री दुर्गा पुस्तक भण्डार (प्रा०) लि०

५२७ ए।२, कक्कड़ नगर, (दरियाबाद), इलाहाबाद।

ब्रांच—जानसेनगंज, इलाहाबाद। मूल्य ५.००

॥ श्रीगणेशाय नमः ॥

# आपदुद्धारक वटुक भैरव स्तोत्रम्



मेरुपृष्ठे सुखासीनं देवदेवं जगद्गुरुम् ॥ शंकरं परिपप्रच्छ पार्वती परमेश्वरम् ॥ १ ॥ श्रीपार्वत्युवाच ॥ भगवन्सर्वधर्मज्ञ सर्वशास्त्रागमादिषु ॥ आपदुद्धारणं मंत्रं सर्वसिद्धिकरं परम् ॥ २ ॥ सर्वेषां चैव भूतानां,हितार्थं वांछितम्मया ॥ विशेषतस्तु राज्ञां वै शांतिपुष्टिप्रसाधनम् ॥ ३ ॥ अङ्गन्यासकरन्यासैः देहन्यास समन्वितम् ॥ वक्तुमर्हसि देवेश मम हर्षविवर्द्धनम् ॥ ४ ॥ शंकर उवाच ॥ शृणु देविमहामंत्रमापदुद्धारहेतुकम् ॥ सर्वदुःखप्रशमनं सर्वशत्रुविनाशनम् ॥५॥ अपस्मारादिरोगानां ज्वरादीनां विशेषतः ॥ नाशनं स्मृतिमात्रेण मंत्रराजमिमं प्रिये

॥ ६ ॥ ग्रहरोगभयानां च नाशनं सुखवर्द्धनम् ॥ स्नेहाद्वक्ष्यामि ते मंत्रं
सर्वसारमिमम्प्रिये ॥ ७ ॥ सर्वकामार्थदं पुण्यं राज्य भोगप्रदं नृणाम् ॥
आ। आपदुद्धारणमिति मंत्रं वक्ष्याम्यशेषतः ॥ ८ ॥ प्रणवं पूर्वमुद्धृत्य बीज-
व. प्रणवमुद्धरेत् ॥ वटुकायेति वै पश्चादापदुद्धारणाय च ॥ ९ ॥ कुरुद्वयं
ततः पश्चाद् वटुकाय पुनः क्षिपेत् ॥ देवाप्रणवमुद्धृत्य मंत्रोद्धारमिमं
प्रिये ॥ १० ॥ मंत्रोद्धारमिदं देवि त्रैलोक्यस्यापि दुर्लभम् ॥ ॐ ह्रीं वं
वटुकाय आपदुद्धारणाय कुरु कुरु वटुकाय ह्रीं ॥ अप्रकाश्यामिमम्मंन्त्रं
सर्वशक्तिसमन्वितम् ॥ ११ ॥ स्मरणादेवमंत्रस्य भूतप्रेत पिशाचिकाः ॥
विद्रवंत्यतिभीता वै कालरुद्रादिव प्रजा ॥१२॥ पठेद्वा पाठयेद्वापि पूजये-
द्वापिपुस्तकम् ॥ अग्नि चौरभयं तस्य ग्रहराजभयं तथा ॥ १३॥ न च ३
मारिभयंकिंचित्सर्वत्रसुखवान् भवेत् ॥आयुरारोग्यमैश्वर्यं पुत्रपौत्रादिसंपदः
॥१४॥ भवतिसततंतस्य पुस्तकस्यापि पूजनात् ॥ न दारिद्र्यं न दौर्भाग्यं

आ
व.

नापदां भयमेव च ॥ १५ ॥ श्रीपार्वत्युवाच ॥ क एष भैरवो नाम
आपदुद्धारणो मतः ॥ त्वया च कथितो देव भैरवः कल्पवित्तमः ॥१६॥
तस्य नामसहस्राणि अयुतान्यर्बुदानि च ॥ सारमुद्धृत्य तेषां वै नामाष्ट-
शतकं वद ॥ १७ ॥ यानि संकीर्तयन्मर्त्यः सर्वदुःख विवर्जितः ॥
सर्वान्कामानवाप्नोति साधकः सिद्धिमेव च ॥ १८ ॥ ईश्वर उवाच ॥
शृणु देवि प्रवक्ष्यामि भैरवस्य महात्मनः ॥ आपदुद्धारणस्येदं नामाष्टशत-
मुत्तमम् ॥१९॥ सर्वपापहरं पुण्यं सर्वापत्तिविनाशनम् ॥ सर्वकामर्थदं
देवि साधकानां सुखावहम् ॥२०॥ सर्वमंगलमांगल्यं सर्वोपद्रवनाशनम् ॥
आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम् ॥ २१ ॥ नामाष्टशतकस्यास्य
छन्दोऽनुष्टुप्प्रकीर्तितः ॥ बृहदारण्यको नाम ऋषिर्देवोथ भैरवः ॥२२॥
लज्जाबीजं बीजमिति वटुकायेति शक्तिकम् ॥ प्रणवः कीलकं प्रोक्त-
मिष्टसिद्धौ नियोजयेत् ॥२३। अष्टबाहुं त्रिनयनमिति बीजं समाहितम् ।

शक्तिः कं कीलकं शेषमिष्टसिद्धौ नियोजयेत् ॥ २४ ॥ अथ न्यासः ॥
ॐ हां वां हृदयाय नमः ॥ ॐ हीं वां शिरसे स्वाहा ॥ ॐ
हूं वं शिखायै वषट् ॥ ॐ हैः वैः कवचाय हुम् ॐ हौं वौं
नेत्रत्रयाय वौषट् ॥ ॐ हैः वः अस्त्राय फट् ॥ इत्यंगन्यासः ॥
अथ करन्यासः ॥ ॐ हां वां अंगुष्ठाभ्यां नमः ॥ ॐ हीं वीं तर्जनीभ्यां
नमः ॥ ॐ हूं वूं मध्यमाभ्यां नमः ॥ ॐ हीं वीं अनामिकाभ्यां नमः
ॐ हां वां करतलकरपृष्ठाभ्यां नमः ॥इति करन्यासः ॥अथ देहन्यासः॥
भैरवं मूर्ध्नि विन्यस्य ललाटे भीमदर्शनम् ॥ नेत्रयोर्भूतहननं सारमेया-
नुगंभ्रुवोः ॥२५॥ कर्णयोर्भूतनाथंच प्रेतबाहुंकपोलयोः ॥ नासापुटौष्ठ-
याश्चैव भस्मांगंसर्वभूषणम् ॥२६॥ अनादिनाथं सौम्येत्र शक्तिहस्तंगले-
न्यसेत् । स्कन्धयोर्दैत्यशमनं बाह्वोरतुलतेजसम् ॥२७॥ पाण्योः कपा-
लिनं न्यस्य हृदयेमुंडमालिनम् । शांतवत्तस्थलेन्यस्य स्तनयोः शमचारि-

आ व. ५

णम् ॥२८॥ उदरे च सदा तुष्टं क्षेत्रेशं पार्श्वयोस्तथा ॥ क्षेत्रपालंपृष्ठ-
आ देशेक्षेत्रज्ञं नाभिदेशके ॥२९॥ पापौघनाशनं कट्यां वटुकं लिंगदेशके ।
द. तथागुह्यस्थानदेशे तथा वा रक्तलोचनम् ॥ ३० ॥ जानुनोर्घंघरारावं
जंघयो रक्तपाणिनम् । गुल्फयोः पादुकासिद्ध पादपृष्ठे सुरेश्वरम् ॥३१॥
आपादमस्तकं चैव आपदुद्धारकं तथा ॥ पूर्वे डमरुहस्तं च दक्षिणे
दन्डधारिणम् ॥ ३२ ॥ खड्गहस्तं पश्चिमे च घन्टावादनमुत्तरे ॥ आग्ने-
य्यामग्निवर्णं च नैर्ऋत्ये च दिगम्बरम् ॥३३॥ वायव्यांसर्वभूतस्थमैशा-
न्येचाष्टसिद्धदम् ॥ ऊर्ध्वं खेचारिणं न्यस्य पाताले रौद्ररूपिणम् ॥३४॥
एवं न्यस्य स्वदेहे च षडङ्गेषु ततोन्यसेत् । रुद्रमंगुष्ठयोन्यर्यस्य तर्जन्योश्च
दिवाकरम ॥३५॥ शिवं मध्य-मयोर्न्यस्य नासिकायां त्रिशूलिनम् ॥
ब्रह्माणं तु कनिष्ठिक्यां स्तनयोस्त्रिपरांतकम् ॥३६॥ मांसाशिनं कराग्रे
तुकरपृष्ठे दिगम्बरम ॥ अथ नामांगन्यासः हृदये भूतनाथाय आदि-

नाथाय मूर्द्धनि ॥ ३७ ॥ आनंदपादपूर्वाय नाथाय च शिखासुच ॥
सिद्धसावरनाथाय कवचं विन्यसेत्तथा ॥ ३८ ॥ सहजानंदनाथाय न्यसे-
आ न्नेत्रत्रयेषु च ॥ परमानन्दनाथाय अस्त्रं चैव प्रयोजयेत् ॥ ३९ ॥
व. एवं न्यासविधिं कृत्वा यथावत्तदनंतरम् ॥ ध्यानंतस्यप्रवक्ष्यामि यथाध्या-
त्वापठेन्नरः ॥ ४० ॥ शुद्धस्फटिकसंकाशं सहस्रादित्यवर्चसम् ॥
नीलजीमूत संकाशं नीलांजनसमप्रभम् ॥४१॥ अष्टवाहुंत्रिनयनंचतुर्बा-
हुंद्विबाहुकम् ॥ दंष्ट्राकरालवदनं नूपुरारावसंकुलम् ॥ ४२ ॥
भुजंगमेखलंदेवमग्निवर्णशिरोरुहम् ॥ दिगम्बरंकुमारीशं वटुकाख्यं
महाबलम् ॥ खट्वांगमसिपाशं च शूलदक्षिणभागतः ॥ ४३ ॥
डमरूश्चकपोलंचवरदेभुजगंतथा ॥ अग्निवर्णसमोपेथं सारमेयसमन्वितम् ॥ ७
ध्यात्वाजपेत्तुसंतुष्टः सर्वान्कामानवाप्नुयात् ॥ ४४ ॥ तन्त्रान्तरे
अथ सात्विकध्यान् ॥ वंदेवालंस्फटिकसदृशं कुंडलीद्भा-

सिवस्त्रं दिव्याकल्पैर्नवमणिमयैः किंकिणीनूपुराद्यैः । दीप्ताकार
विशदवदनं सुप्रसन्नं महेशम् । हस्ताब्जाभ्यां बटुकमनिशं शूलखड्गौ-
आ दधानम् ॥ अथ राजसम् ॥ उद्यद्भास्करसन्निभं त्रिनयन रक्ताङ्गरागस्रजं ।
व. स्मेरास्यम्बदनङ्कपालमभय शूलंदधानं करैः ॥ नीलग्रीवमुदार भूषणयुतं
शीतांशुखंडोज्ज्वलं वंधूकारुणवाससं भयहरं देवं सदाभावयेत् ॥ अथ
तामसध्यानम् ॥ ध्यायेत्त्रैलोक्य कान्तं शशिशकलधरं मुंडमालं महेशम् ॥
दिग्वस्त्रपिंगकेशं डमरुमथसृणिं खड्गशूलं दधानम् ॥ नागं घंटांकपालं-
करसरसिरुहैर्विभ्रतं भीमदंष्ट्रं सर्पाकल्पत्रिनेत्रं मणिमयविलसत्किंकिणीनुपुरा-
ढ्यम् ॥ इति ध्यानत्रयम् ॥ सात्विकंध्यानमाख्यातञ्चतुर्वर्गफलप्रदम्॥ राजसं
कार्यशुभदं तामसं शत्रुनाशनम् ॥ ध्यात्वाजपेत्सुसंहृष्टः सर्वान्कामान- ८
वाप्नुयात् ॥ आयुरारोग्यमैश्वर्यं सिद्ध्यर्थं विनियोजयेत् । अस्य श्रीवटुक-
भैरवनामाष्टशतकस्य आपदुद्धारण स्तोत्रमंत्रस्य बृहदारण्यको नाम ऋषिः।

आ
व.

श्रीवटुकभैरवो देवता अनुष्टुपछन्दः । ह्रीं बीजं वटुकायेति शक्तिः ॥ प्रणवः कीलम ॥ अभीष्टसिद्ध्यर्थे जपे विनियोगः ॥ ह्रीं ह्रौं नमः शिवाय नमस्कारमंत्रः ॥ॐ॥ करकलितकपालः कुंडलीदंडपाणिस्तरुणतिमिरनीलव्यालयज्ञोपवीती । क्रतुसलयसपर्य्याविघ्नविच्छेदहेतुर्जयति वटुकनाथः सिद्धिदः साधकानाम् ॥ ॐ भैरवो भूतनाथश्च भूतात्मा भूतभावनः ॥ क्षेत्रज्ञः क्षेत्रपालश्च क्षेत्रज्ञः क्षत्रियो विराट ॥ १ ॥ श्मशानवासीमांसाशीखर्परशीमखांतकृत् ॥ रक्तपः पानपः सिद्धः सिद्धिदः सिद्धिसेवितः ॥ २ ॥ कङ्कालकामशमनः कालकाष्ठातनुः कविः ॥ त्रिनेत्रो बहुनेत्रश्च तथा पिंगललोचनः ॥३॥ शूलपाणिः खड्गपाणिः कंकाली धूम्रलोचनः ॥ अभीरुर्भैरवोनाथो भूतपो योगिनीपतिः ॥ धनदो धनहारी च धनवान् प्रतिभानवान् ॥ नागहारो नागपाशी व्योमकेशः कपालभृत् ॥ ५ ॥ कालः कपालमाली च कमनीयः कलानिधिः ॥

त्रिलोचनोज्ज्वलन्नेत्रस्त्रिशिखी च त्रिलोकपः ॥ ६ ॥ त्रिनेत्रतनयो डिंभः शान्ता शांतजनप्रियः ॥ वटुकोबहुवेषश्चखट्वांगवरधारकः ॥७॥ भूताध्यक्षः पशुपतिः भिक्षुकः परिचारिकः ॥ धूर्तो दिगंबरः शौरिर्हरिणः पाण्डुलोचनः ॥ ८॥ प्रशान्तः शान्तिः शुद्धः शंकर प्रियबांधवः ॥ अष्टमूर्तिर्निधीशश्च ज्ञानचक्षुस्तपोमयः ॥ ९ ॥ अष्टाधारः षडाधारः सर्पयुक्तः शिखीसखा ॥ भूधरोभूधराधीशो भूपतिर्भूधरात्मजः ॥१०॥ कंकालधारीमुन्डी च नागयज्ञोपवीतकः । जृम्भणो मोहनस्तंभी मारणः क्षोभणस्तथा ॥ ११ ॥ शुद्धो नीलांजनप्रख्यो प्रत्यग्रामुण्डभूषितः बलिभुग्बलिभुङ्नाथो बालोबालपराक्रमः ॥ १२ ॥ सर्वापत्तारणो दुर्गो दुष्टभूतानिसेवितः ॥ कामीकलानिधिः कांतः कामिनीकशकृद्वशी॥१३॥ सर्वसिद्धिप्रदो वैद्यः प्रभुर्विष्णुरितीव ह ॥ अष्टोत्तरशतं नाम्ना भैरवस्य महात्मनः ॥१४॥ मया ते कथितं देवि रहस्यं सर्वकामदम् ॥ य इदं

पठते स्तोत्र नामाष्टशतमुत्तमम् ॥ १५ ॥ न तस्य दुरितं किंचिन्नेव
भूतभयं तथा ॥ न च मारीभयं तस्य ग्रह राजभयं तथा ॥ १६ ॥ न
आ शत्रुभ्यो भयं किंचित्प्राप्नुयान्मानवः क्वचित् ॥ पातकानांभयंनैवपठेत्स्तो-
व. त्रमनुत्तमम् ॥१७॥ मारीभयेराजभये तथा चोराग्निजेभये ॥औत्पातिकभये
चैव तथातुःस्वप्नजेभये ॥१८॥ बंधनेन् तथा घारे पठेत्स्तोत्रमनुत्तमम ॥
सर्वं प्रशममायाति भयं भैरवकीर्तनात् ॥ १९ ॥ एकादशसहस्रैस्तुपुर-
श्चरणमुच्यते ॥ यस्त्रिसंध्यं पठेद्देविसम्वत्सरमतन्द्रितः ॥ २० ॥ स सि-
द्धिमाप्नुयादिष्टांदुलभोऽपि च मानवः ॥ षण्मासाद्भूमिकामस्तु जपि-
त्वाप्राप्नुयान्महीम् ॥ २१ ॥ राज शत्रुविनाशार्थं पठेन्मासाष्टकं यदि ॥
रात्रौ वा जपतेद्देविनाशयेत्सर्वशत्रुकान् ॥ २२ ॥ जपेन्मासत्रयम्मर्त्यो- ११
राजानम्बशमानयेत् ॥ धनार्थी च सुतार्थी च दरार्थी चापि मानवः
॥ २३ ॥ पठेन्मासत्रयं देवि वारमेकन्तथानिशि ॥ धनं पुत्रांस्तथादा-

रान् प्राप्नुयान्नात्र संशयः ॥ २४ ॥ रोगीरोगात्प्रमुच्येत बद्धोमुच्येत बन्धनात् ॥ भीतोभयात्प्रमुच्येत देवि सत्यं न संशयः ॥२५॥ निगडे-शत्रावियो बद्धः कारागृहनिपातितः ॥ शृंखलाबंधनं प्राप्तः पठेच्चेद्यादिवा-
 
निशम् ॥ २६ ॥ यान्यान्समीहतेकामांस्तान्प्राप्नोतिनिश्चितम् ॥

अप्रकाश्यंमिदंगुह्यं न देयं यस्यकस्यचित् ॥ २७ ॥ सुकुलीनायाशान्ताय ऋजवे दम्भवर्जिते ॥ दद्यात्स्तोत्रमिदं पुण्यंसर्वकामफलप्रदम् ॥ इति श्रुत्वा ततो देवी नामाष्ट शतमुत्तमम् ॥ २८ ॥ संतोषं परमप्राप्यभैरवस्य महात्मनः ॥ भैरवस्य प्रसन्नाभूत्सर्वलोकमहेश्वरी ॥ २९ ॥ भैरवस्तु प्रहृष्टोऽभूत्सर्वगः परमेश्वरः ॥ जजापपरयाभक्त्या सदा सर्वेश्वरेश्वरीम् ॥ ३० ॥ इति श्रीरुद्रयामले ईश्वरपार्वतीसम्वादे वटुकभैरवस्तोत्रं सम्पूर्णम् ॥

—०००—

## ॥ कालभैरवाष्टकम् ॥

श्रीगणेशाय नमः ॥ देवराजसेव्यमानपावनांघ्रिपंकजं व्यालयज्ञसूत्र-
का मिन्दुशेखरं कृपाकरम्। नारदादियोगि वृंदितं दिगंबरं काशिकापुराधिनाथ
व. कालभैरवं भजे ॥ १ ॥ भानुकोटिभास्वरं भवाब्धितारकं परं नीलकंठ-
मीप्सितार्थदायकं त्रिलोचनम्। कालकालमंबुजाक्षमक्षशूलमक्षरं काशि-
कापुराधिनाथ कालभैरवं भजे ॥ २ ॥ शूलटंकपाशदंडपाणिमादिकारणं
श्यामकायमादिदेवमक्षरं निरामयम्। भीमविक्रमं प्रभुं विचित्रतांडवप्रिय
काशिका० ॥ ३ ॥ भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं भक्तवत्सलं स्थितं
समस्तलोकविग्रहम्। विनिक्वणन्मनोज्ञहेमकिंकिणीलसत्कटिं काशिका०।४।
धर्मसेतुपालकं त्वधर्ममार्गनाशकं कर्मपाशमोचकं सुशर्मदायकं विभुम्। 
स्वर्णवर्णशेषपाशशोभिताङ्गमण्डलं काशिका० ॥ ५ ॥ रत्नपादुकाप्रभा-
भिराममपादयुग्मकं नित्यमद्वितीयमिष्टदैवतं निरंजनम्। मृत्युदर्पनाशनं

करालदंश मोचणं काशिका० ॥ ६ ॥ अट्टहासभिन्नपद्मजांडकोशसंतति दृष्टिपाहनष्टपापजालमुग्रशासनम् । अष्टसिद्धिदायकं कपालमौलिकन्धरं काशिका० ॥ ७ ॥ भूतसंघनायकं विशालकीर्तिदायकं काशिवासलोक-
आ पुण्यपापशोधकं विभुम् । नीतिमार्गकोविदं पुरातनं जगत्पतिं काशिका० १४
व० ॥ ८ ॥ कालभैरवाष्टकं पठंति ये मनोहरं ज्ञानमुक्तिसाधनंविचित्र पुण्य-वर्धनम् । शोकमोहदैन्यलोभकोपतापनाशनं ते प्रयांति कालभैरवां-घ्रिसन्निधिध्रुवम् काशिका० ॥ ९ ॥ इति श्रीमच्छंकराचार्यविरचितं कालभैरवाष्टकं सम्पूर्णम् ॥

—***—

## ॥ ऋणमोचनमंगलस्तोत्रम् ॥

श्रीगणेशायनमः ॥ मङ्गलो भूमिपुत्रश्च ऋणहर्ता धनप्रदः । स्थिरासनो महाकायः सर्वकर्मविरोधकः ॥ १ ॥ लोहितो लोहिताक्षश्च सामगानां

कृपाकरं ॥ धरात्मजः कुजो भौमो भूतिदो भूमिनन्दनः ॥२॥ अङ्गारको
यमश्चैव सर्वरोगापहारकः। वृष्टेः कर्ताऽपहर्ता च सर्वकामफलप्रदः ॥३॥
आ. एतानि कुजनामानि नित्यं यः श्रद्धया पठेत्। ऋणं न जायते तस्य धनं
व. शीघ्रमवाप्नुयात् ॥४॥ धरणीगर्भसंभूत विद्युत्कान्तिसमप्रभम्। कुमारं
शक्तिहस्तं च मङ्गलं प्रणमाम्यहम् ॥५॥ स्तोत्रमङ्गारकस्यैतत्पठनीयं सदा
नृभिः ॥ न तेषां भौमजा पीडा स्वल्पाऽपि भवति क्वचित् ॥ ६ ॥
अङ्गारक महाभाग भगवन्भक्तवत्सल। त्वां नमामि ममाशेषमृणमाशु
विनाशय ॥७॥ ऋणरोगादिदारिद्रयं ये चान्ये ह्यपमृत्यवः। भयक्लेश-
मनस्तापा नश्यन्तु मम सर्वदा॥८॥अतिवक्रदुराराध्य भोगमुक्तजितात्मनः
॥ तुष्टो ददासि साम्राज्यं रुष्टो हरसि तत्क्षणात् ॥ ९ ॥ विरञ्चिश-
क्रविष्णूनां मनुष्याणां तु का कथा। तेन त्वं सर्वसत्वेन ग्रहराजो महाबलः १५
॥१०॥ पुत्रान्देहि धनं देहि त्वामस्मि शरणं गतः। ऋणदारिद्रय

आ

व.

दुःखेन शत्रूणां च भयाच्चतः ॥११॥ एभिर्द्वादशभिः श्लोकैर्यः स्तोति धरासुतम् । महती श्रियमाप्नोति ह्यपरो धनदो युवा ॥१२॥

॥ इति श्रीस्कन्दपुराणे भार्गवप्रोक्तं ऋणमोचनमंगलस्त्रोतम् ॥



हर प्रकार की पुस्तकें मँगाने का पता—

**श्री दुर्गा पुस्तक भण्डार (प्रा०) लि०**

५२७ ए।२, कक्कड़नगर (दरियाबाद) इलाहाबाद ।

ब्रांच—जानसेन गंज, इलाहाबाद ।

Printed by :—Kitab Mahal, (W. D.) Pvt. Ltd., Allahabad.